कश्च । यत्रानुमीयते सोऽयं पक्षः, तत्राविद्यमानोऽसन् । यस्माद्विषाणी तस्मादश्वः इत्यत्राप्रसिद्धो हेतुः । रासभपिण्डे पक्षीकृते चायमेवासन् । संदिग्धोऽनैकान्तिकः । साध्यमप्येकोऽन्तस्तदभावोऽप्येकोऽन्तः, एकस्मिन्नन्ते वर्तते इत्यैकान्तिकः, विपर्ययादनैकान्तिकः यो द्वयोरप्यन्तयोर्वर्तते इति । यस्माद्विषाणी तस्माद्गौरित्यनैकान्तिकस्योदाहरणम् । न्यायोक्तयोः बाधसत्प्रतिपक्षयोरप्यनैकान्तिकादावेवान्तर्भावः ।

शब्दो न प्रमाणान्तरं, प्रत्यक्षलैङ्गिकपूर्वकत्वात् । स्वयं हि ज्ञातमर्थं परान् प्रतिपादयितुकामेन शब्दः प्रयुज्यते । सोऽयं संज्ञादिवत् तदेव ज्ञापयतीति न प्रमाणान्तरम् । उपमानमपि यथायथं प्रत्यक्षलैङ्गिकयोरन्तर्भवति । तथाहि, दृश्यमानगवये गोसादृश्यज्ञानं तावत्प्रत्यक्षमेव । स्मर्यमाणायां गवि गवयसादृश्यज्ञानमपि प्रत्यक्षमनुमानं वा । यदपि गोसदृशो गवय इत्यारण्यकवाक्यं श्रुतवतो ग्रामीणस्यारण्यं गतस्य गवयपिण्डदर्शने तत्र गवयशब्दस्य सङ्केतग्रहः, तदप्यनुमानमेव । अर्थापत्तिरप्यनुमानेऽन्तर्भवति । तथाहि, जीविनो देवदत्तस्य गृहाभावेन बहिर्भावकल्पनमनुमानमेव । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र दिवाऽभुञ्जानस्य पीनत्वेन रात्रिभोजनकल्पनमप्यनुमानमेवेति संक्षेपः । धीमद्भिरन्यदवधेयमिति शिवम् ।

हसरसेरपुरवास्तव्यः

श्रीचन्द्रकान्तशर्म्मा ।

# वैशेषिकसूत्राणां वर्णानुक्रमणिका.

समाप्ता चेयं वैशेषिकसूत्राणां वर्णानुक्रमणिका.

## हमारे प्रकाशन

| | | |
|---|---|---|
| १. | अष्टाविंशतोपनिषद् २८ उप. मूल | १५/- |
| २. | ईषाद्यष्टोत्तरशतोपनिषद् १११ उप. मूल | ५०/- |
| ३. | सांख्यकारिका<br>तत्वकौमुदी एवं किरणावलि टिकाओं सहित | १५०/- |
| ४. | भुवनेश लौकिक न्यायसाहस्त्री<br>पं. ठाकुरदत्त शर्मा द्वारा संग्रहित | ८०/- |
| ५. | वेदस्तुति<br>श्री धरी एवं श्री धरिप्रकाश व्याख्या सहित | २०/- |
| ६. | दीक्षाप्रकाशिका (निर्णय सागर संस्करण) | १५/- |
| ७. | यज्ञ कर्म पद्धति | २५/- |
| ८. | तर्कसंग्रह<br>दीपिका, किरणावलि न्यायबोधनी एवं पदकृत्य<br>टीका एवं टिप्पणियों सहित | ३५/- |
| ९. | श्री शिवपुराण भाषा टीका सहित, | |
| | पत्राकार | १००/- |
| | सजिल्द | १२५/- |
| १०. | न्यायसिद्धान्त मुक्तावली श्री नृसिंहदेव शास्त्री | २००/- |
| ११. | प्रातः नित्य कर्मविधिः | १०/- |

विवरण प्रमेय संग्रह :

स्वामी निश्चलानन्द सरस्वती कृत "उज्वला" नामक विस्तृत हिन्दी व्याख्या सहित

प्राप्ति स्थान : व्यास प्रकाशन डी. १६/१३ मानमन्दिर, वाराणसी